गत्वा सकृदज्ञानतो द्विजः'॥ इति । तथा प्रोत्साहितस्य तु पञ्चरात्रम् । उभयोरिच्छातः प्रवृत्तौ सप्तरात्रम् । स्वेन प्रोत्साहितायामष्टरात्रम् । शूद्रायां तु कामतः प्रवृत्तस्य रेतःसेकात्पूर्वं निवृत्तौ जाबालिराह—'अतिकृच्छ्रं तप्तकृच्छ्रं पराकं वा तथैव च । गुरोः शूद्रां सकृद्गत्वा बुध्या विप्रः समाचरेत्' ॥ इति । तथा प्रोत्साहितस्यातिकृच्छ्रः । उभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः । स्वेन प्रोत्साहितायां पराकः । तत्रैवाकामतः प्रवृत्तस्य दैर्घतमसम्—'प्राजापत्यं सान्तपनं सप्तरात्रोपवासकम् । गुरोः शूद्रां सकृद्गत्वा चरेद्विप्रः समाहितः' ॥ इति । तथा प्रोत्साहितस्य प्राजापत्यम् । उभयेच्छातः प्रवृत्तौ सान्तपनम् । स्वेन प्रोत्साहितायां सप्तरात्रोपवास इति । अनयैव दिशान्येषामपि स्मृतिवचसां विषयव्यवस्थोहनीया । पुरुषवच्च स्त्रीणामप्यत्र महापातकित्वमविशिष्टम् । तथा हि कात्यायनः—'एवं दोषश्च शुद्धिश्च पतितानामुदाहृता । स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः' ॥ इति । अतस्तस्या अपि कामतः प्रवृत्तौ मरणान्तिकमविशिष्टम् । अत एव पुरुषस्य मरणान्तिकमुक्त्वा स्त्रिया अपि योगीश्वरेण मरणान्तिकं दर्शितम्—'छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा' इति । अकामतस्तु मनुनोक्तम्—(११।१८८) 'एतदेव व्रतं कार्यं योषित्सु पतितास्वपि' इति । द्वादशवार्षिकमे(१)वार्धकल्पनया कार्यम् । यानि पुनर्गुरुतल्पसमानि 'सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्' ॥ इति प्रतिपादितानि, यानि चातिदेशविषयभूतानि 'पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः' ॥ इति प्रतिपादितानि, तेष्वेकरात्रादूर्ध्व(२)मकामतोऽभ्यस्तेषु यथाक्रमेण षड्वार्षिकं नववार्षिकं च प्रायश्चित्तं विज्ञेयम् । अस्मिन्नेव विषये कामतोऽत्यन्ताभ्यासे मरणान्तिकम् । तथा च बृहद्यमः—'रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च । सपिण्डापत्यदारेषु प्राणत्यागो विधीयते' ॥ इति । अन्त्यजाश्चात्र—'चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः' ॥ इति मध्यमाङ्गिरोदर्शिता ज्ञातव्याः । न तु 'रजकश्चर्मकारश्च' इत्यादिप्रतिपादिताः । तेषु लघु-

(१) मेवात्र कल्पनया ड० । (२) दूर्ध्वं कामतो ड० ।

प्रायश्चित्तस्योक्तत्वात् । तथा ( ११।१७४ )—'चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति' ॥ इति चाण्डालादिसाम्यं प्रतिपादयता मनुनापि कामतोऽत्यन्ताभ्यासे मरणान्तिकं दर्शितम् । तथा हि—अज्ञानतश्चण्डालीगमनाभ्यासे पतत्यतः पतितप्रायश्चित्तं द्वादशवार्षिकं कुर्यात् । कामतोऽत्यन्ताभ्यासे चण्डालैः साम्यं गच्छति । अतो द्वादशवार्षिकाधि(१)कं मरणान्तिकं कुर्यात् । एतच्च बहुकालाभ्यासविषयम् । एकरात्राभ्यासे तु वर्षत्रयम् । यथाह मनुः ( ११।१७८ )—'यत्करोत्येकरात्रेण वृषलीसेवनाद् द्विजः । तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति' ॥ इति । अत्र वृषलीशब्देन चण्डाल्यभिधीयते—'चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका । ऊढा या च सगोत्रा स्याद्वृषल्यः पञ्च कीर्तिताः' ॥ इति स्मृत्यन्तरे चण्डाल्यां वृषलीशब्दप्रयोगदर्शनात् । बन्धकी स्वैरिणी । कथं पुनरत्राभ्यासावगमः । उच्यते—यत्करोत्येकरात्रेणेत्यत्यन्तसंयोगापवर्गवाचिन्यास्तृतीयाया दर्शनात् । एकरात्रेण चात्यन्तसंयोगो गमनस्याभ्यासं विनानुपपन्न इति गमनाभ्यासोऽवगम्यते । अत एवैकरात्राद्बहुकालाभ्यासविषयं प्रागुक्तं द्वादशवर्षादिगुरुतल्पव्रतातिदेशिकं मरणान्तिकं च । यदा पुनर्ज्ञानतोऽज्ञानतो वा (२)चण्डाल्याद्याः सकृद्गच्छति तदा 'चण्डालपुल्कसानां तु भुक्त्वा गत्वा च योषितम् । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम्' ॥ इति यमाद्युक्तं संवत्सरं कृच्छ्रानुष्ठानं चान्द्रायणद्वयं यथाक्रमेण द्रष्टव्यम् । स्वयोनिष्वन्त्यजासु चेत्येकवाक्यसमभिव्याहाराद्भगिन्यादिष्वपीयमेव व्यवस्था वेदितव्या । मरणान्तिकं चात्राग्निप्रवेशनम् । 'जनन्यां च भगिन्यां च स्वसुतायां तथैव च । स्नुषायां गमनं चैव विज्ञेयमतिपातकम् । अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम्' ॥ इति कात्यायनस्मरणात् । जनन्यां सकृद्गमने अग्निप्रवेश इति द्रष्टव्यम् । महापातकस्य जननीगमनस्य तदतिदेशविषयभूतातिपातकस्य भगिन्यादिगमनस्य च तुल्यत्वायोगात् । यत्तु वृद्धयमेनोक्तम्—'चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम् । मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम् ॥ मातुलानीं प्रव्रजितां स्वगोत्रां नृपयोषितम् । शिष्यभार्यां गुरोर्भार्यां गत्वा

(१) धिकारान्मरणा ङ० । (२) चण्डालाद्यां ग० ।

चान्द्रायणं चरेत्' ॥ इति, यच्चाङ्गिरोवचनम्—'पतितान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासं कुर्वीत चान्द्रायणमथापि वा' ॥ इति, तदुभयमपि गुरुतल्पातिदेशविषयेषु कामतः प्रवृत्तस्य रेतःसेकादर्वाङ्निवृत्तौ द्रष्टव्यम् । यदपि संवर्तवचनम्—'भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् । एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत्' ॥ इति, तदनन्तरोक्त एव विषये अकामतः प्रवृत्तस्य रेतःसेकादर्वाङ्निवृत्तौ द्रष्टव्यम् । यदा पुनरेता एवात्यन्तव्यभिचारिणीर्गच्छति तदापीदमेव प्रायश्चित्तयुगलं चान्द्रायणतप्तकृच्छ्रात्मकं क्रमेण कामतोऽकामतश्च प्रवृत्तौ द्रष्टव्यम् । साधारणस्त्रीषु तु गुरुणोपभुक्तास्वपि गमने गुरुतल्पत्वदोषो नास्ति । 'जात्युक्तं पारदार्यं च कन्यादूषणमेव च । साधारणस्त्रियां नास्ति गुरुतल्पत्वमेव च' ॥ इति व्याघ्रस्मरणात् । एवमन्यान्यपि स्मृतिवचनान्युच्चावचप्रायश्चित्तप्रतिपत्तिपराण्यन्विष्य विषयव्यवस्थोहनीया ग्रन्थगौरवभयान्न लिख्यन्ते ॥ २६० ॥

इति गुरुतल्पप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) अथ क्रमप्राप्तं महापातकिसंसर्गिप्रायश्चित्तमाह—

एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ॥

कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम् ॥ २६१ ॥

यस्त्वेभिर्ब्रह्महादिभिश्चतुर्भिः सह शयनासनादिना वत्सरं संवसेत् सोऽपि तत्समः संसर्गनिरूपकब्रह्महादितुल्यप्रायश्चित्तवान् भवति । अपिशब्देन सद्यःपातहेतुयाजनाऽध्यापनयौनादिसंसर्गसमुच्चयः । तुशब्देन प्राणान्तिकप्रायश्चित्तं कामकृतेऽपि संसर्गे व्यवच्छिनत्ति ।

यस्य येनेह संसर्गस्तस्य तद्व्रतमादिशेत् ।

इति छागलेयवचनात् ।

महापातककर्तारश्चत्वारो वा विशेषतः ।
अग्निं प्रविश्य शुध्यन्ति स्नात्वा वा महति क्रतौ ॥

इति यमवचनाच्च । अज्ञानतः संसर्गे तु षड्वार्षिकमेव । अत्रोपपातक्यादिसंसर्गेऽप्युपपातकित्वादितत्तत्प्रायश्चित्तं भवति ।

यो येन पतितेनैषां संसर्गं याति मानवः ।

इत्यविशेषितमनुवचनादित्यवधेयम् । पतिते यौनसम्बन्धः कचिदपातित्यप्रयोजकत्वान्न प्रायश्चित्तनिमित्तमित्याह—कन्यामिति । एषां ब्रह्महादीनां चतुर्णां कन्यां पतितावस्थायामुत्पन्नामपि सोपवासामकिञ्चनां पितृदत्तवस्त्रालङ्कारादिहीनां स्वयमेवोपगतां समुद्वहेदेवं न पततीत्यर्थः । अत्र विशेषमाह वृद्धहारीतः—'पतितस्य कुमारीं विवस्त्रामहोरात्रमुपोषितां प्रातः शुक्लेनाऽहतेन वाससाऽऽच्छादितां नाऽहमेतेषां न ममैते इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहे'दिति । अन्यथा तु तस्या विवाहे पतितो भवत्येवेति जि(शा)कलः ? । अत्र महापातकेषु लघुगुरुप्रायश्चित्तान्तराणि, तद्विषयव्यवस्थाश्च ग्रन्थविस्तरभयात् कलिवशेन पापनिह्नवाय बहुधा प्रायश्चितानाचरणाच्च नेह तन्यते । एवमग्रेऽपि संक्षेपतो व्याख्यानेन बीजमवसेयम् ॥२६१॥

( मिता० ) एवं ब्रह्महादिमहापातकिप्रायश्चित्तान्यभिधायाऽवसरप्राप्तं तत्संसर्गिप्रायश्चित्तमाह—

एभिरिति । एभिः पूर्वोक्तैर्ब्रह्महादिभिरेकं संवत्सरं योऽत्यन्तं संवसति सहाचरति सोऽपि तत्समः । यो येन सहाचरति स तदीयमेव प्रायश्चित्तं कुर्यादिति तदीयप्रायश्चित्तातिदेशार्थं तत्समग्रहणं, न पुनः (१)पातकित्वातिदेशार्थम् । तस्य 'यश्च तैः सह संवसेत्' इत्युपदेशात एव सिद्धत्वात् । अत्र च सत्यप्यतिदे(२)शत्वे कृत्स्नमेव द्वादशवार्षिकं कार्यम्, साक्षान्महापातकित्वात्संसर्गिणः । अपिशब्दान्न केवलं महापातकिसंयोगी तत्समः किन्त्वतिपातकिपातक्युपपातक्यादीनां मध्ये यो येन सह संसर्गं करोति सोऽपि तत्सम इति तदीयमेव प्रायश्चित्तं कुर्यादिति दर्शयति । अत एव मनुना सकलं प्रायश्चित्तजातमभिधायाभिहितम् (११।१८१)–'यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये' ॥ इति । विष्णुनापि सामान्येनोपपातक्यादेनास्विमात्रसंसर्गे तत्प्रायश्चित्तभाक्त्वं दर्शितम्—'पापात्मना येन सह यः संसृज्यते स तस्यैव व्रतं कुर्यात्' इति । अत एव मनुना सामान्येनैनस्विमात्रप्रतिषेधः कृतः (११।१८९)—'एनस्विभिरनिर्णिक्तैर्नार्थं कञ्चित्समाचरेत्' इति । तथा—'न संसर्गं भजेत्साद्भिः प्रायश्चित्ते कृते सति' इति । एतच्च द्वादशवार्षिकादिपतितप्रायश्चित्तं बुद्धिपूर्वसंसर्गविष-

---

( १ ) पातकत्वा ख० । ( २ ) तिदेशकत्वे ड० ।

-यम् । 'पतितेन सहोषित्वा जानन् संवत्सरं नरः । मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्' ॥ इति देवलस्मरणात् । अज्ञानतः संसर्गे पुनर्वसिष्ठोक्तम्—'पतितसम्प्रयोगे तु ब्राह्मेण वा यौनेन वा स्रौवेण वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वाऽनश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते' इति । तथा—'ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । एते महापातकिनो यश्च तैः सह संवसेत्' ॥ (१)इति, तै(२)रिति तृतीयया सर्वनामपरामृष्टप्रकृतब्रह्महादिचतुष्टयसंसर्गिण एव महापातकित्ववचनात्तत्संसर्गिणो न महापातकित्वम् । ननु महापातकिसंसर्ग एव महापातकित्वे हेतुर्न ब्रह्महादिविशेषसंसर्गः । तस्य व्यभिचारात् । अतोऽत्र ब्रह्महादिसंसर्गिसंसर्गिणोऽपि महापातकिसंसर्गो विद्यते इति तस्यापि महापातकित्वं स्यान्न च प्रतिषेधः । उच्यते—स्यादेवं यदि प्रमाणान्तरगम्यं महापातकित्वं स्यात् । शब्दैकसमाधिगम्ये तु (३)तस्मिन्नेव भवितुमर्हतीति । तैरिति प्रकृतविशेषपरामर्शिना सर्वनाम्ना ब्रह्महादिविशेषसंसर्गस्यैव महापातकित्वहेतुत्वस्यावगमितत्वात् । एवं च सति प्रतिषेधाभावोऽप्यहेतुः प्राप्त्यभावादेव । अतः संसर्गिसंसर्गिणां द्विजातिकर्मभ्यो हानिर्न भवति प्रायश्चित्तं तु भवत्येव । न च संसर्गिसंसर्गिणः पातित्याभावे कथं प्रायश्चित्तमिति वाच्यम् । (११।१८९)—'एनस्विभिरनिर्णिक्तैर्नार्थं कश्चित्समाचरेत्' इति सामान्येनैनस्विमात्रसंसर्गप्रतिषेधेन महापातकिसंसर्गिसंसर्गस्यापि प्रतिषिद्धत्वात्पातित्याभावेऽपि युक्तमेव प्रायश्चित्तम् । तच्च पादहीनम् । 'यो येन संवसेद्वर्षं सोऽपि तत्समतामियात् । पादहीनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः' ॥ इति व्यासोक्तं द्रष्टव्यम् । एवं चतुर्थपञ्चमयोरपि कामतः संसर्गिणोरर्धहीनं त्रिपादोनं च द्रष्टव्यम् । अतः साक्षाद्ब्रह्महादिसंसर्गिण एव तदीयप्रायश्चित्ताधिकारो न संसर्गिसंसर्गिण इति सिद्धम् । अत्र च ब्रह्महादिषु यद्यपि कामतो मरणान्तिकमुपदिष्टं तथापि संसर्गिणस्तन्नातिदिश्यते । स तस्यैव व्रतं कुर्यादिति व्रतस्यैवातिदेशात् । मरणस्य च व्रतशब्दवाच्यत्वाभावात् । अतोऽत्र कामःकृतेऽपि संसर्गे द्वादशवार्षिकमकामतस्तु तदर्धम् । संसर्गश्च स्व-

(१) इति सर्वं निरवद्यं ङ० । (२) तैरिति सर्वनाम ख० । (३) तस्मान्नैवं ङ० ।

निबन्धनकर्मभेदादनेकधा भिद्यते । यथाह वृद्धबृहस्पतिः—'एक-शय्यासनं पङ्क्तिर्भाण्डपङ्क्त्यन्नमिश्रणम् । याजनाध्यापने योनिस्तथा च सहभोजनम् ॥ नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह' इति । देवलोऽपि—'संलापस्पर्शनिःश्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पापं सङ्क्रमते नृणाम्' ॥ इति । एकशय्यासनमेकखट्वाशयनमेकपङ्क्तिभोजनमेकभाण्डपचनमन्नेन मिश्रणं संसर्गस्तदीयान्नभोजनमिति यावत् । याजनं पतितस्य स्वस्य वा तेन । अध्यापनं तस्य स्वस्य वा तेन । यौनं तस्मै कन्यादानं तत्सकाशाद्वा कन्यायाः प्रतिग्रहः । सहभोजनमेकामत्रभोजनम् । संलापः सम्भाषणम् ।स्पर्शो गात्रसंमर्दः। निःश्वासः पतितमुखवायुसम्पर्कः। सहयानमेकतुरगाद्यारोहणम् । एतेषां मध्ये केन कर्मणा कियता कालेन पातित्यमित्यपेक्षायां बृहद्विष्णुनोक्तम्—'संवत्सरेण पतति पतितेन सहाचरन्नेकयानभोजनासनशयनैर्यौनस्रौवमुख्यैस्तु सम्बन्धैः सद्य एव' इति । अत्रैकभोजनमेकपङ्क्तिभोजनम् । एकामत्रभोजने तु सद्यः पातित्यम् । 'याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः' ॥ इति देवलस्मरणात् । स्रौवशब्देन याजनमभिधीयते । मुख्यशब्देन मुखभवत्वेनाध्यापनम् । यौनस्रौवमुख्यैरिति सत्यपि द्वन्द्वनिर्देशे प्रत्येकमेव तेषां सद्यः-पतनहेतुत्वम् । 'यः पतितैः सह यौनमुख्यस्रौवाणां सवन्धानामन्यतमं सम्बन्धं कुर्यात्तस्याप्येतदेव प्रायश्चित्तम्'इति सुमन्तुस्मरणात् । एकयानादिचतुष्टयस्य तु समुदितस्यैव पतनहेतुत्वम् । 'एकयानभोजनासनशयनैः' इति इतरेतरयुक्तानां निर्देशात् । प्रत्येकानुष्ठानस्य तु पतनहेतुत्वाभावेऽपि दोषहेतुत्वमस्त्येव । 'आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् । संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि' इति पराशरवचनेन निरपेक्षाणामपि पापहेतुत्वावगमात् । संलापस्पर्शनिःश्वासानां तु यानादिचतुष्टयेनानुषङ्गिकतया समुच्चितानामेव पतनहेतुत्वं न पृथग्भूतानामल्पत्वात् । पापहेतुत्वं पुनरस्त्येव । 'संलापस्पर्शनिःश्वास' इति देवलवचनस्य दर्शितत्वात् । अतः संलापादिरहिते सहयानादिचतुष्टये कृते पञ्चमभागोनं द्वादशवार्षिकं प्रायश्चित्तं कुर्यात् । तत्संहिते तु पूर्णम् । एवं च सति 'एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः' इति योगीश्वरवचनमपि सहयान-

दिचतुष्टयपरमेव युक्तम् । यतः संलापादीनां पृथक्पातित्यहेतुत्वं नास्ति । अत एव मनुना (११।१७०)—'संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात्' ॥ इति यानादिचतुष्टयस्यैव संवत्सरेण पातित्यहेतुत्वमुक्तम् । अत्रासनग्रहणं शयनस्याप्युपलक्षणम् । अत्र च 'संवत्सरेण पतति पतितेन सहाचरन् । यानासनाशनात्' इति व्यवहितेन सम्बन्धः । प्राग्दर्शितविष्णुवचनानुरोधात् । तथा—'संवत्सरेण पतति पतितेन सहाचरन् । भोजनासनशय्यादि कुर्वाणः सार्वकालिकम्' ॥ इति देवलवचनाच्च । न चानन्वयदोषः, यानासनाशनादिहेतोराचरन्नाचारं कुर्वन्निति भेदाविवक्षया सम्बन्धोपपत्तेः । यथा एतया पुनराधेयसंमितयेष्ट्येष्ट्वेति । यद्वा आचरन्निति शत्रा हेत्वर्थस्य गमितत्वात् यानासनाशनादिति द्वितीयार्थे पञ्चमी । याजनाध्यापनाद्यौना( त्सहभोजना )न्न तु संवत्सरेण पतति किन्तु सद्य एव प्राचीनवचनानिचयानुरोधादेव । अतो यौनादिचतुष्टयेन सद्यः पतति यानादिचतुष्टयेन तु संवत्सरं निरन्तरा(१)भ्यासेनेति युक्तं 'वत्सरं सोऽपि तत्समः' इति अत्यन्तसंयोगवाचिन्या द्वितीयया दर्शनादन्तरितदिवसगणना कार्या । यथा षष्ट्यधिकशतत्रयदिवसव्यापित्वं संसर्गस्य भवति ततो न्यूने तु न पतितप्रायश्चित्तं किन्त्वन्यदेव । यथाह पराशरः—'संसर्गमाचरन्विप्रः पतितादिष्वकामतः । पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ मासार्धं मासमेकं वा मासत्रयमथापि वा । अब्दार्धमेकमब्दं वा भवेदूर्ध्वं तु तत्समः ॥ त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरन् । चरेत्सान्तपनं कृच्छ्रं तृतीये पक्ष एव तु ॥ चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे ततः । षष्ठे चान्द्रायणं कुर्यात्सप्तमे त्वैन्दवद्वयम् ॥ अष्टमे च तथा पक्षे षण्मासान्कृच्छ्रमाचरेत्' ॥ इति । कामतः संसर्गे पुनर्विशेषः स्मृत्यन्तरेऽभिहितः । सुमन्तुः—'पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम् । पराकस्त्वर्धमासे स्यान्मासे चान्द्रायणं चरेत्' ॥ इति । 'मासत्रये प्रकुर्वीत कृच्छ्रं चान्द्रायणोत्तरम् । षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत् ॥ संसर्गे त्वाब्दिके कुर्यादब्दं चान्द्रायणं नरः' ॥ इति । अत्र चाब्दिके संसर्गे इति किञ्चिन्न्यून इति द्रष्टव्यम् । पूर्णे तु वत्सरे मन्वादिभिर्द्वादशवार्षिकस्मरणात् । यत्तु बार्हस्पत्यं वचनम्—'षाण्मासिके तु

(१) भ्यस्तेनेति ङ० ।

संसर्गे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्धमाचरेत्' ॥ इति । याजनाध्यापनयानैकपात्रभोजनानां षण्मासात्पातित्यवचनमेतदकामतोऽत्यन्तापदि पञ्चमहायज्ञादिप्राये याजनेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्ते च योनिसम्बन्धे द्रष्टव्यम् । प्रकृष्टयाजनादिभिः सद्यः पातित्यस्योक्तत्वात् । एतद्विगवलम्बनेनैव दुहितृभगिनीस्नुषागाम्यतिपातकिसंसर्गिणां कामतो नववार्षिकम्, अकामतः सार्धचतुर्वार्षिकं कल्पनीयम् । सखिपितृव्यदारादिगामिपातकिसंसर्गिणां कामतः षड्वार्षिकमकामतस्त्रैवार्षिकम् । अथोपपातक्यादिसंसर्गिणामपि कामतस्तदीयमेव त्रैमासिकमकामतोऽर्धमित्यूहनीयम् । पुरुषवत्स्त्रीणामपि महापातक्यादिसंसर्गात्पातित्यमविशिष्टम् । यथाह शौनकः—'पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव'। ब्राह्मणी हीनवर्णसेवायामधिकं पततीति । अतस्तासामपि महापातकिप्रभृतीनां मध्ये येन सह संसर्गस्तदीयमेव प्रायश्चित्तमर्धक्लृ(१)त्या योजनीयम् । एवं बालवृद्धातुराणामपि कामतोऽर्धमकामतः पादः । तथानुपनीतस्यापि बालस्य कामत' पादोऽकामतस्तदर्धमित्येषा दिक् ॥

(मिता०) पतितसंसर्गप्रतिषेधेन प्रतिषिद्धस्य यौनसंबन्धस्य क्वाचित्प्रतिप्रसवमाह—

कन्यामिति । एषां पतितानां कन्यां पतितावस्थायामुत्पन्नां सोपवासां कृतसंसर्गकालोचितप्रायश्चित्तामकिञ्चनामगृहीतवस्त्रालङ्कारादिपितृधनामुद्वहेत । कन्यां समुद्वहेदिति वदन् स्वयमेव कन्यां त्यक्तपतितसंसर्गा समुद्वहेन्न पुनः पतितहस्तात्प्रतिगृह्णीयादिति दर्शयति । एवं च सति पतितयौनसंसर्गप्रतिषधविरोधोऽपि परिहृतो भवति । अयं चार्थो वृहद्धारीतेन स्पष्टीकृतः—'पतितस्य तु कुमारीं विवस्त्रामहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाच्छादितां नाहमेतेषां न ममैत इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत्' इति । तथा एषां कन्यां समुद्वहेदिति वचनात्स्त्रीव्यतिरिक्ततदीयापत्यस्य संसर्गानर्हतां दर्शयति । अत एव वासिष्टः—'पतितेनोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः, सा हि परगामिनी तामरिक्थामुद्वहेत्' इति ॥२६१॥

इति संसर्गप्रायश्चित्तप्रकरणम् ।

---

(१) मर्धकल्प्या ङ० ।

(वी०मि०) निषिद्धसंसर्गप्रायश्चित्तप्रसङ्गान्निषिद्धसंसर्गोत्पन्नप्रतिलोमवधे प्रायश्चित्तमाह—

चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु ॥

अवकृष्टान् प्रतिलोमजान् सूतमागधादीन् प्रत्येकं निहत्य तु चान्द्रायणं चरेत् ॥

(मिता०) निषिद्धसंसर्गप्रसङ्गान्निषिद्धसंसर्गोत्पन्नप्रातिलोमवधे प्रायश्चित्तमाह—

चान्द्रायणमिति। अवकृष्टाः सूतमागधादयः प्रतिलोमोत्पन्नास्तेषां प्रत्येकं हनने चान्द्रायणम्। तथा च शङ्खः—'सर्वेषामवकृष्टानां वधे प्रत्येकं चान्द्रायणम्' इति। यद्वाङ्गिरसोक्तम्—'सर्वान्त्यजानां गमने भोजने सम्प्रमापणे। पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्' ॥ इति पराकं कुर्यात्। तत्र कामतः सूतादिवधे चान्द्रायणम्। अकामतस्तु सूतवधे पराकः। वैदेहकवधे पादोनम्। चण्डालवधे द्विपादः। मागधवधे पादोनः पराकः। क्षत्तरि द्विपादः। आयोगवे च पादद्वयम्। अनयैव दिशा चान्द्रायणस्यापि तारतम्यं कल्प्यम्। यत्तु ब्रह्मगर्भवचनम्—'प्रतिलोमप्रसूतानां स्त्रीणां मासावधिः स्मृतः। अन्तरप्रभवानां च सूतादीनां चतुर्द्विषद्' ॥ इति तदावृत्तिविषयम्। तत्र सूतवधे षण्मासाः, वैदेहकवधे चत्वारः, चण्डालवधे द्वाविति योग्यतयान्वयः, तथा मागधवधे चत्वारः, क्षत्तरि द्वैमासिकं, आयोगवे च द्वैमासिकमिति व्यवस्था ॥

(वी० मि०) ननु चान्द्रायणप्राजापत्यादिव्रतानां गायत्रीजपाद्यङ्गकत्वात् तत्र शूद्राणामनधिकारात् कथं प्रायश्चित्तनिष्पत्तिरत आह—

शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यति ॥ २६२ ॥

वैदिकमन्त्रपाठाधिकारहीनः शूद्रोऽनेन चान्द्रायणाद्युक्तकालेन अपिशब्दाद्वेदमन्त्राघटितकर्तव्यतासहितेन शुद्ध्यति। एतेन वेदसंहिताजपगर्भो 'लोमभ्यः स्वाहे'त्यादिगर्भो वा प्रागुक्तप्रयोगः शूद्रभिन्नपर एव। शूद्रस्य तु प्रायश्चित्तान्तरमित्यपि सूचितम् ॥ २६२ ॥

(मिता०) नैमित्तिकव्रतानां जपादिसाध्यत्वाद्विद्याविरहिणां च शूद्रादीनां तदनुपपत्तेराज्यावेक्षणादिसाध्येष्विवान्धानामनधिकारमाशङ्क्याह—

शूद्र इति । यद्यपि शूद्रो जपाद्यधिकारहीनस्तथाप्यनेन द्वादशवार्षिकादिकालसंपाद्येन व्रतेन शुध्यति । शूद्रग्रहणं स्त्रीणां प्रतिलोमजानां चोपलक्षणम् । यद्यपि तस्य गायत्र्यादिजपासंभवस्तथापि नमस्कारमन्त्रजपो भवति । अत एव स्मृत्यन्तरेऽभिहितम्—'उच्छिष्टं चास्य भोजनमनुज्ञातोऽस्य नमस्कारो मन्त्रः' इति । यद्वा वचनबलाज्जपादिरहितमेव व्रतं कुर्यात्—'तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्' ॥ इत्यङ्गिरःस्मरणात् । तथापरमपि तेनैवोक्तम्—'शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः । दानैर्वाप्युपवासैर्वा द्विजशुश्रूषया तथा' ॥ इति । यत्तु मानवम् ( ४।८० )—'न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्' इति शूद्रस्य व्रतोपदेशनिषेधपरं वचनं तदनुपसन्नशूद्राभिप्रायम् । यदपि स्मृत्यन्तरवचनम्—'कृच्छ्राण्येतानि कार्याणि सदा वर्णत्रयेण तु । कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयते' ॥ इति, तत्काम्यकृच्छ्राभिप्रायम् । अतः स्त्रीशूद्रयोः प्रतिलोमजानां च त्रैवर्णिकवद्व्रताधिकार इति सिद्धम् । यत्तु गौतमवचनम्—'प्रतिलोमा धर्महीनाः' इति, तदुपनयनादिविशिष्टधर्माभिप्रायम् ॥ २६२ ॥

इति पञ्चमहापातकप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) एवं महापातकप्रायश्चित्तानि निरूप्य तत्प्रसङ्गेन प्रतिलोमजवधप्रायश्चित्तं चाऽभिधाय क्रमप्राप्तमुपपातकप्रायश्चित्तमभिदधानः प्रथमोद्दिष्टे गोवधे प्रायश्चित्तमाह—

पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ॥
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥ २६३ ॥
कृच्छ्रं चैवाऽतिकृच्छ्रं च चरेद्वापि समाहितः ॥
दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशा(१)श्च गाः ॥ २६४ ॥

अविधिपरतन्त्रतया गोघ्नो मासं व्याप्य संयतो ब्रह्मचर्यसंयुक्त आसीत । पञ्चगव्यं गोमूत्रगोमयक्षीरदधिघृतात्मकं पिबेत् । रात्रौ गोशालाशायी प्रातर्वनं प्रविचरन्तीनां गवामनुगमनव्रतवान् स्यात् । मासान्ते गोः प्रदानं कुर्यात् । एवं शुद्ध्यतीत्यर्थः । अनुगमनं चरन्त्याः

---

( १ ) स्तु इति मुद्रितपुस्तके पाठः ।

पश्चाच्चलनम्, उत्तिष्ठन्त्यामूर्ध्वावस्थानम्, उपविशन्त्यामुपवेशनं, गोष्ठे प्रविशन्त्यां स्वयमपि । 'कृच्छ्रं चरेन्नर' इति मनूक्तं मासं समाहितो ब्रह्मचर्यगोष्ठशयनगवानुगमनवान् चरेत् । अपिकारात् गोप्रदानलाभः ।

प्राजापत्यं चरेन्मासं गोहन्ता चेदकामतः ।
गोहितो गोऽनुगामी स्यात् गोप्रदानेन शुद्ध्यति ॥

इति वचनात् । अत्राकामत इत्यभिधानादिह उपवासप्राप्तपञ्चगव्यपानस्याधिक्येन कामकृतवधोऽयम् । अतिकृच्छ्रं तु कृच्छ्रद्विगुणकष्टसाध्यत्वात् कामकृत एव बोध्यम् । इदं च त्रयं ब्राह्मणादिभिन्नस्वामिकगोवधे ब्राह्मणेन कृते द्रष्टव्यम् ।

देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तमम् ।

इति नारदवचनात् । गुरूणि ब्राह्मणादिस्वामिकगोवधे त्वाह । त्रिरात्रमुपोष्य वृष एकादशो यासां ता दश गा दद्यादिति केचिद्याचक्षते । भवदेवस्तु शूद्रसम्बन्धिगोवधे पञ्चगव्यपानादिकं मासपर्यन्तमेकं प्राजापत्यं तत्प्रत्याम्नाय एका धेनुर्वा एकं चाऽतिकृच्छ्रं तत्प्रत्याम्नायो धेनुद्वयं वा मीलितमेतदष्टधेनुदानपर्यवसितं प्रायश्चित्तम्, वैश्यसम्बन्धिगोवधे तु दद्यात्त्रिरात्रमित्यादिकमित्याह । युक्तं च तत् । अन्यथा कृच्छ्राऽतिकृच्छ्रयोर्द्वादशाहसाध्ययोर्मासेन समाप्त्यभावादसङ्गतः । वापीत्यव्ययसमुदायस्तु समुच्चयार्थः । इत्थं च "प्राजापत्यं चरेन्मास"मिति प्राग्लिखितवचनेऽपि मासं गोनुगमीत्यन्वय इति ध्येयम् । एवं च 'गां चेद्धन्यात्तस्याश्चर्मणा परिवेष्टितः षण्मासान् कृच्छ्रं तप्तकृच्छ्रं वा अनुतिष्ठेत वृषभावहतौ दद्या'दिति वसिष्ठोक्तं क्षत्रियस्वामिकगोवधे ।

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् ।
कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥
चतुर्थकालमश्नीयादक्षारलवणं मितम् ।
गोमूत्रेणाचरेत् स्नानं द्वौ मासौ नियतेन्द्रियः ॥
दिवाऽनुगच्छेत्ता गावस्तिष्ठन्नूर्ध्वं रजः पिबेत् ।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥
तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनासु तथासीनो नियतो वीतमत्सरः ॥

आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः।
पतितां पङ्कलग्नां वा सर्वोपायैः प्रमोचयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
न कुर्वीताऽऽत्मनस्त्राणं गोरकृत्वा तु शक्तितः॥
आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे तथा खले।
भक्षयन्तीर्न कथयेत्पाययन्त्यश्च वत्सकान् ॥
अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥
वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥

इति मनूक्तमतिकष्टसाध्यं ब्राह्मणस्वामिकगोवधे योज्यम्। अत्र त्रयोविंशतिर्धेनवो भवन्ति, वीरासनमासनव्यतिरेकेणोपवेशनम्। इदं च सर्वं कामतः। अकामतस्तु तदर्द्धम्। तदिदं क्षत्रियस्वामिकगोवधे वैश्यस्वामिकगोवधे अकामकृतगोवधे च प्रायश्चित्तं चकारैस्त्रिभिः समुच्चितम् ॥ २६३–२६४ ॥

( मिता० ) महापातकादिपञ्चकमध्ये महापातकातिपातकाऽनुपातकप्रायश्चित्तान्युक्त्वाऽधुनोपपातकप्रायश्चित्तानि व्याचक्षाणः पाठक्रमप्राप्तं गोवधप्रायश्चित्तं तावदाह—

पञ्चगव्यमिति। गां हन्तीति गोघ्नः। मूलविभुजादित्वात्कप्रत्ययः। असौ मासं समाहित आसीत। किं कुर्वन् पञ्चगव्यं पिबन् पञ्च च तानि गव्यानि गोमूत्रगोमयक्षीरदधिघृतानि यथाविधि मिश्रितानि पिबन्। आहारान्तरपरित्यागेन भोजनकार्ये तस्य विधानात्। तथा गोष्ठेशयः। प्राप्तशयनानुवादेन गोष्ठविधानाद्दिवा च स्वापप्रतिषेधाद्रात्रौ गोशालायां शयानः। गा अनुगच्छति तदस्य व्रतमिति गोऽनुगामी। व्रते णिनिः। अतश्च यासां गोष्ठे शेते सन्निधानात्ता एव गाः प्रातर्वनं विचरन्तीरनुगच्छेत्। अनुगच्छेदिति वचनाद्यदा ता गच्छन्ति तदैव स्वयमनुगच्छेत्। यदा तु तिष्ठन्त्यासते वा तदा पश्चाद्गमनस्याशक्यकरणत्वात्स्वयमपि तिष्ठेदासीत वेति गम्यते। अनुगमनविधानादेव ताभिः सायं गोष्ठं व्रजन्तीभिः सह गोष्ठप्रवेशोऽप्यर्थसिद्धः। एवं कुर्वन्मासान्ते गोप्रदानेन एकां गां दत्वा तावता शास्त्रार्थस्य सम्पत्तेर्गोहत्यायाः शुध्यतीत्येकं व्रतम्। मासं गोष्ठेश-

यो गोऽनुगामीति चाऽनुवर्तते । पञ्चगव्याहारस्य तु निवृत्तिः कृच्छ्रविधानादेव । अतश्च मासं निरन्तरं कृच्छ्रं सामाहितश्चरेदित्यपरम् । अत एव जाबालेन मासप्राजापत्यस्य पृथक् प्रायश्चित्तत्वमुक्तम्—'प्राजापत्यं चरेन्मासं गोहन्ता चेदकामतः । गोहितो गोऽनुगामी स्याद्गोप्रदानेन शुध्यति' ॥ इति । अतिकृच्छ्रं वा तथैव समाचरेदित्यन्यत् । कृच्छ्रातिकृच्छ्रयोर्लक्षणमुत्तरत्र वक्ष्यते । अथवा त्रिरात्रमुपवासं कृत्वा वृषभ एकादशो यासां गवां ता दद्यादिति व्रतचतुष्टयम् । तत्राकामकृते जातिमात्रब्राह्मणस्वामिकगोमात्रवधे (उपवासं कृत्वा) वृषभैकादशगोदानसहितस्त्रिरात्रोपवासो द्रष्टव्यः । विशिष्टस्वामिकाया विशिष्टगुणवत्याश्च वधे गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात् । क्षत्रियसम्बन्धिन्यास्तु तादृग्विधे व्यापादने मासं पञ्चगव्याशित्वं प्रथमं प्रायश्चित्तम् । अत्र मासं पञ्चगव्याशनस्यातिस्वल्पत्वान्मासोपवासतुल्यत्वम् । ततश्च षड्भिः षड्भिरुपवासैरेकैकप्राजापत्यकल्पनया पञ्चकृच्छ्राणां प्रत्याम्नायेन पञ्च धेनवो मासान्ते च दीयमाना गौरेकेति षट् धेनवो भवन्तीति वृषभैकादशगोदानसहितत्रिरात्रव्रताल्लघीयस्त्वम् । कथं पुनर्ब्राह्मणगवीनां गुरुत्वम् । 'देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तमम्' इति नारदेन तद्द्रव्यस्योत्तमत्वाभिधानात्, गोषु ब्राह्मणसंस्थास्विति दण्डभूयस्त्वदर्शनाच्च । वैश्यसम्बन्धिन्यास्तु तादृग्विधे व्यापादने मासमतिकृच्छ्रं कुर्यात् । अतिकृच्छ्रे त्वाद्ये त्रिरात्रत्रये पाणिपूरान्नभोजनमुक्तम् । अन्त्ये त्रिरात्रेऽनशनम् । अतोऽतिकृच्छ्रधर्मेण मासव्रते क्रियमाणे षड्रात्रमुपवासो भवति । चतुर्विंशत्यहे च पाणिपूरान्नभोजनम् । ततश्च कृच्छ्रप्रत्याम्नायकल्पनया किञ्चिन्न्यूनं धेनुपञ्चकं भवतीति पूर्वस्माद् व्रतद्वयाल्लघिष्ठत्वेन वैश्यस्वामिकगोवधविषयता युक्ता । तादृश एव विषये शूद्रस्वामिकगोहत्यायां मासं प्राजापत्यव्रतं द्वितीयम् । तत्र च सार्धप्राजापत्यद्वयात्मकेन प्रत्याम्नायेन किञ्चिदधिकं धेनुद्वयं भवतीति पूर्वेभ्यो लघुतमत्वाच्छूद्रविषयतोचिता । अथ चैतत्प्रायश्चित्तचतुष्टयं साक्षात्कर्त्रनुग्राहकप्रयोजकानुमन्तृषु गुरुलघुभावतारतम्यापेक्षया पूर्वोक्त एव विषये योजनीयम् । यत्तु वैष्णवं व्रतत्रयम्—'गोघ्नस्य पञ्चगव्येन मासमेकं पलत्रयम् । प्रत्यहं स्यात्पराको वा चान्द्रायणमथापि वा' ॥ इति, यच्च काश्यपीयम्—'गां हत्वा तच्चर्मणा प्रावृतो मासं

गोष्ठेशयस्त्रिषवणस्नायी नित्यं पञ्चगव्याहारः' इति, यच्च शातातपीयम्—'मासं पञ्चगव्याहारः' इति, तत्पञ्चकमपि याज्ञवल्कीयपञ्चगव्याहारसमानविषयम् । यच्च शङ्खप्रचेतोभ्यामुक्तम्—'गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्सशिखं वपनं कृत्वा गोचर्मणा प्रावृतो गाश्चानुगच्छन् गोष्ठेशयो गां च दद्यात्' इति । एतच्च याज्ञवल्क्यमासातिकृच्छ्रव्रतसमानविषयम् । 'दद्यात्त्रिरात्रं चोपोष्य' इत्येतद्विषयं चात्यन्तगुणिनो हन्तुर्वेदितव्यम् । अत्रैव विषये पञ्चगव्याशक्तस्य तु द्वितीयं काश्यपीयं 'मासं पञ्चगव्येन' इति प्रतिपाद्य 'षष्ठे काले पयोभक्षो वा गच्छन्तीष्वनुगच्छेत्तासु सुखोपविष्टासु चोपविशेन्नातिप्लुतं गच्छेन्नातिविषमेणावतारयेन्नाल्पोदके पाययेदन्ते ब्राह्मणान्भोजयित्वा तिलधेनुं दद्यात्' इति द्रष्टव्यम् । अत्राप्यशक्तस्य 'गोघ्नो मासं यवागूं प्रसृतितन्दुलशृतं भुञ्जानो गोभ्यः प्रियं कुर्वन् शुध्यति' इति पैठीनसिनोक्तं वेदितव्यम् । यत्तु सौमन्तम्—'गोघ्नस्य गोप्रदानं गोष्ठेशयनं द्वादशरात्रं पञ्चगव्याशनं गवानुगमनं च' इति, यच्च संवर्तेनोक्तम्—'सक्तुयावकभैक्षाशी पयो दधि घृतं शकृत् । एतानि क्रमशोऽश्नीयान्मासार्धं सुसमाहितः ॥ ब्राह्मणान्भोजयित्वा तु गां दद्यादात्मशुद्धये' । इति, यच्च बार्हस्पत्यम्—'द्वादशरात्रं पञ्चगव्याहारः' इति, तत्त्रितयमपि याज्ञवल्कीयमासप्राजापत्येन समानविषयं, मृतकल्पगोहत्याविषयं वा, विषमप्रदेश(१)त्रासेन जनितव्याधितो मरणविषयं वा वेदितव्यम् । तदिदं सर्वं प्रागुक्तमकामविषयम् । यदा पुनरीदृग्विधामविशिष्टविप्रस्वामिकामविशिष्टां गां कामतः प्रमापयति तदा मनुना मासं यवागूपानं, मासद्वयं हविष्येण चतुर्थकालभोजनं, मासत्रयं वृषभैकादशगोदानयुक्तं शाकादिना वर्तनमिति व्रतत्रितयमाम्नातम् । यथाह (११।१०८–११६)—'उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् । कृतवापो वसेद्गोष्ठे चर्मणार्द्रेण संवृतः ॥ चतुर्थकालमश्नीयादक्षारलवणं मितम् । गोमूत्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् । शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत् ॥ तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् । आसीनासु तथासीनो नियतो वीतमत्सरः ॥ आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः । प-

(१) प्रदेशाशनजानित ख० ।

तितां पङ्कलग्नां वा (१)सर्वोपायैर्विमोचयेत् ॥ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् । न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले । भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ॥ अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति । स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः । अविद्यमानं सर्वस्वं वेदविद्भ्यो निवेदयेत्'॥ इति । एतत्त्रितयं याज्ञवल्क्यीयमासप्राजापत्यमासपञ्चगव्याशनवृषभैकादशगोदानयुक्तत्रिरात्रोपवासरूपव्रतत्रितयविषयं यथाक्रमेण द्रष्टव्यम् । यस्त्वङ्गिरसा मानवेतिकर्तव्यतायुक्तं त्रैमासिकमभिधायाऽधिकमभिहितम्—'अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् । गोमतीं वा जपेद्विद्यामोङ्कारं वेदमेव च ॥ व्रतवद्धारयेद्दण्डं समन्त्रां चैव मेखलाम्' ॥ इति, तन्मानवविषयम् । एवं पुष्टितारुण्यादिकिञ्चिद्गुणातिशययोगिन्यां द्रष्टव्यम् । 'अतिबालामतिकृशामतिवृद्धां च रोगिणीम् । हत्वा पूर्वविधानेन चरेदर्धं व्रतं द्विजः' ॥ इति पुष्टितारुण्यादिरहितायां गव्यर्धप्रायश्चित्तदर्शनात् । यदा तु याज्ञवल्कीयमासातिकृच्छ्रव्रतनिमित्तभूतां गामविशिष्टस्वामिकां जातिमात्रयोगिनीं कामतो व्यापादयति तदा 'विहितं यदकामानां कामात्तद् द्विगुणं चरेत्' इति न्यायेन पूर्वोक्तमेवाकामविहितमासातिकृच्छ्रव्रतं द्विगुणं कुर्यात् । यत्तु हारीतेन—'गोघ्नस्तच्चर्मोर्ध्ववालं परिधाय' इत्यादिना मानवीमितिकर्तव्यतामभिधायोक्तम्—'वृषभैकादशाश्च गा दत्त्वा त्रयोदशे मासे पूतो भवति' इति, तत्सवनस्थश्रोत्रियगोवधे अकामकृते द्रष्टव्यम् । यत्तु वसिष्ठेन—'गां चेद्धन्यात्तस्याश्चर्मणार्द्रेण परिवेष्टितः षण्मासान् कृच्छ्रतप्तकृच्छ्रावातिष्ठेदृषभवेहतौ दद्यात्' इति षाण्मासिकं कृच्छ्रतप्तकृच्छ्रानुष्ठानमुक्तम्, यदपि देवलेन—'गोघ्नः षण्मासांस्तच्चर्मपरिवृतो गोव्रजनिवासी गोभिरेव सह चरन् प्रमुच्यते' इति, तत् द्वयमपि हारीतीयेन समानविषयम् । तत्रैव कामकारकृते कात्यायनीयं त्रैवार्षिकम्—'गोघ्नस्तच्चर्मसंवीतो वसेद्गोष्ठेऽथवा पुनः । गाश्चानुगच्छेत्सततं मौनी वीरासनादिभिः ॥ वर्षशीतातपक्लेशवह्निपङ्कभयार्दितः । मोक्षयेत्सर्वयत्नेन पूयते वत्सरैस्त्रिभिः' ॥ इति द्रष्टव्यम् । यच्च शाङ्खं त्रैवार्षिकम्—'पादं

(१) सर्वप्र.णैर्विमोक्षयेत् ङ० ।

तु शूद्रहत्यायामुदक्यागमने तथा। गोवधे च तथा कुर्यात्परस्त्रीगमने तथा' ॥ इति, तदपि कात्यायनीयव्रतसमानविषयम्। यत्तु यमेनाङ्गिरसीमितिकर्तव्यतामभिधाय 'गोसहस्रं शतं वापि दद्यात्सुचरितव्रतः। अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्' ॥ इति गोसहस्रयुक्तं गोशतयुक्तं च त्रैमासिकं व्रतद्वयमभिहितम्, तत्र यदा सवनस्थश्रोत्रियादिदुर्गतबहुकुटुम्बिब्राह्मणसम्बन्धिनीं कपिलां कर्माङ्गभूतां गर्भिणीं बहुक्षीरत्वलक्षणिमादिगुणशालिनीं निर्गुणो धन(१)वान् सप्रयत्नं खड्गादिना व्यापादयति तदा गोसहस्रयुक्तं त्रैमासिकं कुर्यात्। 'गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम्। खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेत्' ॥ इति विशिष्टायां गवि वा ईस्पत्ये प्रायश्चित्तविशेषदर्शनात्। अत एव प्रचेतसा—'स्त्रीगर्भिणीगोगर्भिणीबालवृद्धवधेषु भ्रूणहा भवति' इति। ईदृग्विधमेव गोवधमभिसन्धाय ब्रह्महत्याव्रतमतिदिष्टम्। द्वितीयं तु याम्यं गोशतदानयुक्तं त्रैमासिकं व्रतं कात्यायनीयव्रतविषये धनवतो द्रष्टव्यम्। यत्तु गौतमेन वृषभैकशतगोदानसमुच्चितं त्रैवार्षिकं प्राकृतं ब्रह्मचर्यं वैश्यवधेऽभिधाय गोवधेऽतिदिष्टम्—'गां च हत्वा वैश्यवत्' इति। एतच्च त्रैवार्षिकव्रतप्रत्याम्नायभूतनवतिधेनुभिः सार्धं वृषभैकशता गावो नवन्यूनं द्विशतं भवतीति गोसहस्रयुक्तत्रैमासिकव्रतान्न्यूनत्वात्पूर्वोक्तविषये एव कामतो वधे। यद्वा तत्रैव विषये गर्भरहितायाः कामतो वधे द्रष्टव्यम्। तादृग्विधाया एव गर्भरहितायास्त्वकामतो हननेऽपि कात्यायनीयमेव त्रैवार्षिकं कल्प्यम्। यत्तु यमेनोक्तम्—'काष्ठकोष्ठाश्मभिर्गावः शस्त्रैर्वा निहता यदि। (२)प्रायश्चित्तं कथं तत्र शस्त्रेऽशस्त्रे विधीयते ॥ काष्ठे सान्तपनं कुर्यात्प्राजापत्यं तु लोष्ठके। तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। त्रिंशद्वा वृषभं चैकं दद्यात्तेभ्यश्च दक्षिणाम्' ॥ इति, तत्पूर्वोक्तगोसहस्रशतादिदानत्रैवार्षिकादिव्रतविषयेष्वेव काष्ठादिसाधनविशेषजनितवधनिमित्तसान्तपनादिपूर्वकत्वप्रतिपादपरं न तु निरपेक्षं, लघुत्वाद्व्रतस्य। तथा वयोविशेषादपि प्रायश्चित्तविशेष उक्तः—'अतिवृद्धामतिकृशामतिबालां च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्धव्रतं द्विजः ॥ ब्राह्मणान्भोजयेच्छक्त्या दद्याद्धेम तिलां-

(१) सम्प्रतिज्ञं ड०। (२) प्रायश्चित्तं पृथक्तत्र धर्मशास्त्रे विधीयते ड।

स्तथा' ॥ इति। नीरोगादिवधे यद्विहितं तस्यार्धम्। बृहत्प्रचेतसाऽप्यत्र विशेष उक्तः—'एकवर्षे हते वत्से कृच्छ्रपादो विधीयते। अबुद्धिपूर्वं पुंसः स्याद् द्विपादस्तु द्विहायने ॥ त्रिहायने त्रिपादः स्यात्प्राजापत्यमतःपरम्' इति। तथा गर्भिण्या वधे यदा गर्भोऽपि निहतो भवति तदा 'प्रतिनिमित्तं नैमित्तिकमावर्तते' इति न्यायेनाविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेष उक्तः—'पाद उत्पन्नमात्रे तु द्वौ पादौ दृढतां गते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ अङ्गप्रत्यङ्गसम्पूर्णे गर्भे चेतःसमान्विते। त्रिगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृतिः' ॥ इति। बहुकर्तृके तु हनने संवर्तापस्तम्बौ विशेषमाहतुः—'एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित्। पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक्' ॥ इति। यादृग्विधगोहत्यायां यद्व्रतमुपदिष्टं तत्पादं प्रत्येकं कुर्युर्वचनात्। एका चेदित्युपलक्षणम्। अतो बहुभिर्द्वयोर्बहूनां च व्यापादने प्रतिपुरुषं पादद्वयं पादोनं वा कल्पनीयम्। एतच्चाकामतो वधे द्रष्टव्यम्। दैवादिति विशेषणोपादानात्। कामकारे तु बहूनामपि प्रत्येकं कृत्स्नदोषसम्बन्धात्कृत्स्नव्रतसम्बन्धो युक्तः। सत्रिणामिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्। 'एकं घ्नतां बहूनां तु यथोक्ताद्द्विगुणो दमः' इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्च। यदा त्वेकेनैव रोध(१)नादिव्यापारेण बहवो गावो व्यापादितास्तत्र संवर्तापस्तम्बौ विशेषमाहतुः—'व्यापन्नानां बहूनां तु रोधने व(२)न्धनेऽपि वा। भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत्' ॥ इति। बहुष्वपि व्यापन्नेषु न प्रतिनिमित्तं नैमित्तिकानुष्ठानं, नापि तन्त्रेण किन्तु वचनबलाद्द्विगुणमेव। तथा भिषगपि विरुद्धौषधदानेनैकस्या अप्यकामतो व्यापादने द्विगुणं गोव्रतं कुर्यात्। भिषव्यतिरिक्तस्य केवलमुपकारार्थं प्रवृत्तस्य त्वकामतः प्रतिकूलौषधदाने व्यास आह—'औषधं लवणं चैव पुण्यार्थमपि भोजनम्। अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ॥ अतिरिक्ते विपत्तिश्चेत्कृच्छ्रपादो विधीयते' ॥ इति। यस्त्वापस्तम्बेनोक्तम्—'पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्। भोजने पादहीनं स्याच्चरेत्सर्वं निपातने' ॥ इति, तद्व्यवहितव्यापारिणो निमित्तकर्तुर्विज्ञेयं, न साक्षात्कर्तुः। साक्षात्कर्तृनिमित्तिनोश्च

(१) बन्धनादि ख०। (२) बन्धने तथा ख०।

भेदस्तेनैव दर्शितः—'पाषाणैर्ल(१)कुटैर्वापि शस्त्रेणान्येन वा बलात् । निपातयन्ति ये गास्तु कृत्स्नं कुर्युर्व्रतं हि ते ॥ तथैव बाहुजङ्घोरुपार्श्वग्रीवाङ्घ्रिमोटनैः'॥ इति । एतदुक्तं भवति—पाषाणखड्गादिभिर्ग्रीवामोटनादिना वा ये गा निपातयन्ति ते साक्षाद्धन्तारस्तेष्वेव कृत्स्नं प्रायश्चित्तम् । ये तु व्यवहितरोधबन्धादिव्यापारयोगिनस्ते निमित्तिनस्तेषां न कृत्स्नव्रतसम्बन्धः किन्तु तदवयवैरेव पादद्विपादादिभिरिति । त(२)त्र च रोधादिना व्यवहितव्यापारत्वाविशेषेऽपि वचनात्क्वचित्पादः क्वचिद् द्विपादः पादोनं क्वचिदिति युक्तम् । अत्राह पराशरः—'गवां बन्धनयोक्त्रैस्तु भवेन्मृत्युरकामतः । अकामकृतपापस्य प्राजापत्यं विनिर्दिशेत् ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम्' ॥ इति । अयं च प्राजापत्यो यदि रोधादिकं कृत्वा तज्जन्यप्रमादपरिजिहीर्षया प्रत्यवेक्षमाण आस्ते तदा द्रष्टव्यः । अकामकृतपापस्येति विशेषणोपादानात् । यदा तु न प्रमादसंस(३)रणं करोति तदा 'पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत्सर्वं निपातने' ॥ इत्यङ्गिरसोक्तं त्रैमासिकपादं किञ्चिदधिकं (४)द्वाविंशत्यहर्गोवधव्रतं कुर्यात् । आपस्तम्बेनापि विशेष उक्तः—'अति(५)दाहातिवाहाभ्यां नासिकाच्छेदने तथा । नदीपर्वतसंरोधे मृते पादोनमाचरेत्' ॥ इति । लक्षणमात्रोपयोगिनि तु दाहे न दोषः । 'अन्यत्राङ्कनलक्षाभ्यां वाहने मो(६)चने तथा । सायं संगोपनार्थं च न दुष्येद्रोधबन्धने' ॥ इति पराशरस्मरणात् । अङ्कनं स्थिरचिन्हकरणम् । लक्षणं सांप्रतोपलक्षणम् । वाहने शास्त्रोक्तमार्गेण रक्षणार्थमपि नालिकेरादिभिर्बन्धने भवत्येव दोषः । 'न नालिकेरेण न शाणवालैर्न चापि मौञ्जे(७)न न बन्धशृङ्खलैः । एतैस्तु गावो न निबन्धनीया बद्ध्वा तु तिष्ठेत्परशुं गृहीत्वा ॥ कुशैः काशैश्च बध्नीयात्स्थाने दोषविवर्जिते'॥ इति व्यासस्मरणात् । तथान्योऽपि विशेषस्तेनैवोक्तः—'घण्टाभरणदोषेण विपत्तिर्यत्र गोर्भवेत् । कृच्छ्रा(८)र्धं तु भवेत्तत्र भूषणार्थं हि तत्स्मृ-

(१) लगुडैर्वापि ङ० ।
(२) तत्रावरोधादिना ङ० । (३) संरक्षणं ङ० । (४) वा विंशत्यहः ।
(५) अविदोहा० ख० । (६) मोचनेऽपि वा ङ० । (७) मौञ्जैर्न च शृङ्खलैश्च ङ० ।
(८) गोकृच्छ्रार्धं भवेत् ङ ।

# काशीसंस्कृतसीरीज़-ग्रन्थमाला।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति। एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति। अस्यां प्रकाश्यमानानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते।

---

१ नलपाकः। नलविरचितः। संपूर्णः (पाकशास्त्रम् १) रु० १—८

२ संक्षेपशारीरकम्। रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् (वेदान्तं १) रु० ८—०

३ वैशेषिकदर्शनम्। पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं १) रु० २—०

४ श्रीसूक्तम्। विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम्। (वैदिकं १) रु० ०—६

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः—प्रथम भाग अव्ययीभावान्तः। (व्याकरणं १) रु० ५—०

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः। द्वितीय भाग। (व्याकरणं १) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता। (न्यायं १) रु० ६—०

७ पञ्चीकरणम्। वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम्। (वेदान्तं २) रु० ०—८

८ अलङ्कारप्रदीपः। श्रीविश्वेश्वरपाण्डेयनिर्मितः। (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः। महाकविकल्याणमल्लविरचितः। (कामशास्त्रं १) रु० ०—१२

१० जातकपारिजातः। श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम्। कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम्। (कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम्। सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम्। (वैदिकं २) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम्। (वेदान्तं ३) रु० १—४

१४ कुमारसंभवं महाकाव्यम्। महाकवि श्रीकालिदासवि०। सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। ( काव्यं२ ) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। ( छंदः १ ) रु० ०—६

१६ कारिकावलि। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। ( न्याय २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वयं हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्। मधुसूदनीटीकासहितम् संपूर्ण(वेदान्तं४)रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः। ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतायविरचितः।( कर्मकाण्डं )रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम्। श्रीगन्धर्वराज पुष्पदन्ताचार्य-विरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाविश्व ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीका-सहितः। ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः। (व्याकरणं ३)रु०४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः। ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः। (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४)रु० ४—८

२८ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलाल ठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । (काव्य३) रु० ०-१२

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ५—०

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः । (न्यायं ४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ५) यन्त्रस्थ

३२ अर्थसंग्रहः पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२)रु०१—०

३३ न्यायवार्त्तिकम् । न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि-गोतमादिचरितसम्बलितबृहत्भूमिकासहितम् । (न्यायं वि० ५) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १-२-३-४ )(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता । (व्याकरणं ६) रु० ६—०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः । नारायणभट्टीयव्याख्यासहितः । सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १—८

५६ अलङ्कारशेखरः । केशवमिश्रकृतः । साहित्योपाध्याय श्रीअनन्तराम-शास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। (अलं०वि०१) रु० १-४

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्ण-भट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचायतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । (न्या० वि० ७) रु० २-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्ययासमेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता । श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता (अव्ययीभावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम् । ( कर्म० वि० ५ ) रु० ४—०

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) रु० ५-०

६१ काव्यालङ्कारः । श्रीभामहाचार्येण विनिर्मितः । काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भुमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभुषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्-थक्नेन सनाथीकृतः । (अलङ्कार वि० २) रु० १—८

६२ ब्रह्मवादः। गोस्वामि श्रीहरिरायजी महाराज विरचितः। श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः। तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः। तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः। श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम्। श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत् भूमिकया विविधपरिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः।
(शुद्धाद्वैतसम्प्रदाय वि० १) रु० १—०

६३ प्रेमरसायनम्। श्रीविश्वनाथपण्डितरचितम् (का०वि०८) रु० १—०

६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च। श्रीमथुरानाथतर्कवागीशकृतम्। न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च।
(न्या० वि० ८) रु० ०—१२

६५ सिद्धान्तविन्दुः। श्रीमधुसूदनसरस्वती विरचित। श्रीभगवान्शङ्कराचार्य विरचित दशश्लोकव्याख्यारूपः श्रीगौड ब्रह्मानन्दविरचित न्यायरत्नावली-नारायणतीर्थ विरचित लघुव्याख्या टिप्पणीसहितः। (वेदान्त वि० ८) रु० ५—०

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः। प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः। महामहोपाध्याय पं० श्री नित्यानन्दपन्तपर्वतीय विरचितः। (कर्मकाण्ड वि० ६) रु० १—८

६७ सांख्यदर्शनम्। श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम्। (सांख्य वि० १) रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः। आचार्यश्रीहेमचन्द्रेण विरचितः।
(कोश वि० २) रु० २—०

६९ शिशुपालवधम्। श्रीमन्माघकविनिर्मितं श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया महामहोपाध्याय श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया समेतम्। (सम्पूर्णम्) रु० ३—८

६९ ,, ,, (संपूर्णम्) रफ मोटा कागज रु० २—८

७० व्याप्तिपञ्चकम् सिंहव्याघ्रलक्षणं च। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च। (न्याय वि० ९) रु० ०—८

---

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस.
गोपालमन्दिर के उत्तर फाटक बनारस सिटी।